०३ अङ्कुरार्पणम्

# अथाङ्कुरार्पणम्

## कालः

सौरे चान्द्रे वा
यस्मिन् मासि
उत्सवात् पूर्वम्
अयुग्मे ऽहनि **कुर्यात्** ।
उद्वाहे तु रात्रौ।

## पालिका-व्यवस्था

तैजसीर् मृण्मयीर् वा पञ्च पालिकाः **सम्भृत्य**
तासां मूले दूर्वाश्वत्थ-शिरीष-बिल्व-पत्राणि **बद्ध्वा**
श्वेत-सूत्रेणावेष्ट्य
शुद्धाभिः मृद्भिर् **आपूर्य**
शुचौ देशे गोमयोपलिप्ते **निधाय**

## पुण्याह-वाचनादि

अमुक-गोत्रस्य अमुक-शर्मणः कुमारस्य
अमुक-कर्माङ्गम् अङ्कुरार्पण-कर्म
करिष्यामि

इति **सङ्कल्प्य**

[[4]]

तद्-अङ्गं पुण्याहं **सङ्कल्प्य** पुण्याहं **वाचयित्वा**
तेन जलेन
कूर्चेन व्याहृतिभिः पालिकाः **प्रोक्ष्य**

## आवाहनादि

मध्यमायां पालिकायाम्

'ओं भूः ब्रह्माणम् आवाहयामि,
ओं भुवः प्रजापतिम् आवाहयामि,
ओं सुवः हिरण्यगर्भम् आवाहयामि,
ओं भूर्भुवस्सुवश् चतुर्मुखमावाहयामि'

इत्य् **आवाह्य**

एवम् एव प्राच्याम्
इन्द्रं, वज्रिणं, शची-पतिं, शत-क्रतुम्,

एवम् एव दक्षिणस्यां यमं, वैवश्वतं, धर्म-राजं, पितृ-पतिम्,

एवं प्रतीच्यां
वरुणं, प्रचेतसं, सु-रूपिणम्, अपां पतिम्,

एवम् एवोत्तरस्यां
सोमम्, इन्दुं, निशा-करम्, ओषधीशं च

**आवाह्य**
ब्रह्मादीनां क्रमेण आसनार्घ्यपाद्याचमनीयानि **दत्वा**

## स्नपनादि

'आपोहिष्ठामयोभुवः' इति तिसृभिः,
'हिरण्यवर्णाश्शुचयः पावका' इति चतसृभिः,
'पवमानस्सुवर्जनः' इत्येतेन अनुवाकेन
**स्नापयित्वा**

---

आपो॒ हि ष्ठा म॑यो॒भुव॑स्
ता न॑ ऊ॒र्जे(जाः) द॑धातन ।
म॒हे रणा॑य(=रमणीयाय) चक्ष॑से(=दर्शनाय) ॥

---

यो व॑ः शि॒वत॑मो॒ रस॒स्
तस्य॑ भाजयते॒ह न॑ः ।
उ॒श॒तीर्(=कामयमाना) इ॑व मा॒तर॑ः ॥

---

(रसाय) तस्मा॒ अरं॑(=शीघ्रम्) गमाम वो
यस्य॒ (प्रभावेण) क्षया॑य॒(=निवासाय)
जिन्व॑थ(=प्रीणयथ) ।
आपो॑ (प्रजा) ज॒नय॑था च नः ॥

---

हिर॑ण्यवर्णा॒श् शुच॑यꣳ पाव॒का,
यासु॑ **जा॒तꣳ** क॒श्यपो॒, यास्व् इन्द्रः॑ ।
अ॒ग्निँय् या गर्भ॑न् **दधि॒रे**, विरू॑पास् -
ता न॒ आप॒श् शꣳ स्यो॒ना **भ॑वन्तु** ।

---

यासा॒ꣳ राजा॒ वरु॑णो **या॒ति** मध्ये॑,
सत्यानृ॒ते **अ॑व॒पश्य॒ञ्** जना॑नाम् । म॒धु॒श्-
**चुत॒श्** शुच॑यो॒ याꣳ पा॑व॒कास् -
ता न॒ आप॒श् शꣳ स्यो॒ना **भ॑वन्तु** ।

---

यासा᳚न् दे॒वा दि॒वि **कृ॒ण्वन्ति॑** भ॒ख्षयँ॑य् -
या अ॒न्तरि॑ख्षे ब॒हु॒धा **भव॑न्ति** । याꣳ
पृ॒थि॒वीम् **पय॑सो॒न्दन्ति॑** शु॒क्रास् -
ता न॒ आप॒श् शꣳ स्यो॒ना **भ॑वन्तु** ।

---

शि॒वेन॑ मा॒ चख्षु॑षा **पश्यताप॒श्** -
शि॒वया॑ त॒नु॒वोप॑ **स्पृशत॒** त्वच॑म् मे । सर्वा॑ꣳ
अ॒ग्नीꣳर् अ॑प्सु॒-षदो॑ **हु॒वे** वो॒,
मयि॒ वर्चो॒ बल॒म् ओजो॒ **नि ध॑त्त** ।

---

पव॑मान॒स् सु॒व॒र्-जनः॑ ।
प॒वित्रे॑ण (नाना-विषयेषु) विच॑र्षणिः ।
यꣳ पोता॒ स **पु॑ना॒तु** मा ।

---

**पु॒नन्तु॑** मा **दे॒वज॒नाः** ।
पु॒नन्तु॒ **मन॑वो** धि॒या ।
पु॒नन्तु॒ **विश्व॑ आ॒यवः॑**(=मनुष्याः) ।

---

जा॒तवे॑दꣳ प॒वित्र॑वत् ।
प॒वित्रे॑ण **पुना॒हि**(=पुनीहि) मा ।
शु॒क्रेण॑ दे॒व॒ **दीद्य॑त्** ।

**अग्ने॒** क्रत्वा॒(=प्रज्ञया) क्रतू॒ꣳर् अनु॑ ॥46॥

---

यत् ते॑ **प॒वित्र॑म् अ॒र्चिषि॑** ।
अग्ने॒ वित॑तम् अन्त॒रा ।
ब्रह्म॒ तेन॑ **पुनीमहे** ।

---

उ॒भाभ्या᳚न् देव **सवितः** ।
प॒वित्रे॑ण स॒वेन॑ च ।
इ॒दम् ब्रह्म॑ **पुनीमहे** ।(5)

---

वै॒श्व॒दे॒वी **पु॑न॒ती** दे॒व्य् **आगा᳚त्**(=आगच्छतु) ।
यस्यै॑ ब॒ह्वीस् त॒नुवो॑ वी॒त-पृ॑ष्ठाः(=कान्त-स्तुतयः) ।
तया॒ **मद॑न्तस्** सध॒-माद्ये॑षु (=सह माद्यन्ति येषु सवनेषु) ।
व॒यꣳ **स्याम॒** पत॑यो र॒यी॒णाम् ॥47॥

---

**वै॒श्वा॒न॒रो** र॒श्मिभि॑र् मा **पुनातु** ।
**वातꣳ॑** प्रा॒णेने॑षि॒रो(←इष गतौ) म॑यो॒भूः ।
**द्यावा॑पृथि॒वी** पय॑सा॒ पयो॑भिः (इति क्रमशः) ।
ऋ॒तावरी॑(=ऋतवत्यौ) य॒ज्ञिये॑ मा **पुनीताम्** ।

---

बृ॒ह॒द्भिस् सवित॒स् तृभिः॑(=त्रिभिः [लोकगणनया]/ तृप्यतेः करणे क्विप्) ।
वर्षि॑ष्ठैर्(=प्रवृद्ध-धर्मैः) दे॒व॒ मन्म॑भिः(=मननीयैः) ।
अग्ने॒ दख्षै᳚ꣳ **पुनाहि** मा ।

---

येन॑ दे॒वा **अपु॑नत** ।
येनापो॑ दि॒व्यङ् **कशः॑**(←कशेर् गतिकर्मणो ऽसुन्) ।
तेन॑ दि॒व्येन॒ ब्रह्म॑णा ॥48॥
इ॒दम् ब्रह्म॑ **पुनीमहे** ।

---

यꣳ पा॑वमा॒नीर् **अ॒ध्येति॑** ।
**ऋषि॑भि॒स् सम्भृ॑त॒ꣳ** रस॑म् ।
सर्व॒ꣳ॒ स पू॒तम् **अ॑श्नाति** ।
**स्व॒दि॒तम्**(=स्वादुकृतं) मा॑त॒रिश्व॑ना(=वायुना) ।

पावमानीर् यो **अध्येति** ।
ऋषिभिस् **सम्भृतꣳ** रसम् ।
तस्मै सरस्वती **दुहे** ।
ख्षीरꣳ सर्पिर् मधूदकम् ।

---

पावमानीस् **स्वस्त्य्-अयनीः** ॥49॥
सु-दुघा हि पयस्वतीः ।
ऋषिभिस् **सम्भृतो** रसः ।
ब्राह्मणेष्व् अमृतꣳ **हितम्** ।

---

पावमानीर् **दिशन्तु** नः ।
इमलँ लोकम् अथो अमुम् ।
कामान्थ् **समर्धयन्तु** नः ।
देवीर् देवैस् **समाभृताः** ।

---

पावमानीस् **स्वस्त्य्-अयनीः** ।
सु-दुघा हि घृतश्-**चुतः**(=क्षारयित्र्यः) ।
ऋषिभिस् **सम्भृतो** रसः ॥50॥
ब्राह्मणेष्व् अमृतꣳ **हितम्** ।

---

येन देवाꣳ पवित्रेण ।
आत्मानम् **पुनते** सदा ।
तेन सहस्र-धारेण ।
पावमान्यꣳ **पुनन्तु** मा ।

---

प्राजापत्यम् पवित्रम् ।
शतोद्यामꣳ हिरण्मयम् ।
तेन ब्रह्म-विदो वयम् ।
**पूतम्** (यथा तथा स्वीयम्) ब्रह्म **पुनीमहे** ।

---

**इन्द्रस्** सुनीती(त्या) सह मा पुनातु ।
**सोमस्** स्वस्त्या **वरुणस्**
समीच्या(=सम्यगञ्चनया) ।
**यमो** राजा प्रमृणाभिꣳ(=प्रमारिकाभिः) पुनातु मा
।
**जातवेदा** मा+ऊर्जयन्त्या पुनातु ॥51॥

---

आचमनवस्त्रोत्तरीय+
आचमन-यज्ञोपवीत+
आचमन-गन्ध-पुष्प-धूप-दीप+
आचमन-नैवेद्य-ताम्बूलादीनि **दत्वा उत्थाय** -

> दिशां पतीन् **नमस्यामि**
> सर्व-काम-फलप्रदान् ।
> **कुर्वन्तु** स-फलं कर्म
> **कुर्वन्तु** सततं शुभम् ॥

इति ब्रह्मादीन् **उपस्थाप्य,**

बीज-व्यवस्था
व्रीहि-यव-मुद्ग-तिल-माष-सर्षपान् पात्रे
**संसृज्य**
क्षीरेण **प्रक्षाल्य,**

'या जाता' इत्यनुवाकेन **अभिमन्त्र्य**

---

या **जाता** ओषधयो
देवेभ्यस् त्रि-युगम् पुरा ।
**मन्दामि** बभ्रूणाम् अहꣳ
शतन् धामानि सप्त च ।

---

शतवँ वो अम्ब **धामानि**
सहस्रम् उत वो **रुहः** ।
अथा शत-क्रत्वो यूयम्
इमम् मे **अगदङ् कृत** ।

---

पुष्पावतीꣳ प्रसूवतीꣳ
फलिनीर् अ-फला उत ।
अश्वा इव **स-जित्वरीर्**

वीरुधꣳ **पारयिष्णवः** ।

“ओषधीर्” (=ओष=दाह/पाक+धीः) इति मातरस्
तद् वो देवीर् **उप ब्रुवे** ।
रपाꣳसि(=पापानि) **विघ्नतीर्** इत
रपश् **चातयमानाः** ।

अश्वत्थे वो **निषदनम्**
पर्णे वो **वसतिx** कृता ।
गो-भाज इत् **किलासथ**
यथ् **सनवथ**(←दाने) पूरुषम् ।

यद् अहवं **वाजयन्न्** इमा
ओषधीर् हस्त **आदधे** ।
आत्मा यख्ष्मस्य **नश्यति**
पुरा जीव-गृभो यथा ।

यद् ओषधयस् **सङ्गच्छन्ते**
राजानस् समिताव् इव ।
विप्रस् स **उच्यते** भिषग्
रख्षो-हा ऽमीव-चातनः ।

“निष्कृतिर्” नाम वो मातार्था यूयꣴ स्थ
“सङ्कृतीः” ।
सराꣳ पतत्रिणीः **स्थन** यद् **आमयति निष्कृत** ।

अन्या वो अन्याम् **अवत्व्**
अन्यान्य् अस्या **उपावत** ।
तास् सर्वा ओषधयस् **सवँविदाना**
इदम् मे **प्रावता** वचः ।

उच् छुष्मा ओषधीनाङ्
गावो गोष्ठाद् **इवेरते** ।
धनꣴ **सनिष्यन्तीनाम्**
आत्मानन् तव पूरुष ।

अति विश्वाः (शरीरम्) **परि ष्ठास्**
स्तेन इव व्रजम् **अक्रमुः** ।
ओषधयꣳ **प्राचुच्यवुर्**
यत् किञ् च तनुवाꣴ रपः ।

यास् त **आतस्थुर्** आत्मानयँ
या **आविविशुꣳ** परुꣳ(=पर्व)-परुः ।
तास् ते यख्ष्मवं **वि बाधन्ताम्**
उग्रो मध्यम-शीर्(←शयने) इव ।

साकयँ यख्ष्म **प्र पत**
श्येनेन, किकिदीविना(=blue jay) ।
साकवँ वातस्य ध्राज्या(=डयनेन),
साकन् **नश्य** निहाकया(=चण्डमारुतेन) ।

अश्वावतीꣴ सोमवतीम्
ऊर्जयन्तीम् उद-ओजसम् ।
**आ वित्सि**(=आलभे) सर्वा ओषधीर्
अस्मा अ-रिष्ट–तातये(←तन्) ।

याꣳ फलिनीर् या अ-फला
अ-पुष्पा याश् च पुष्पिणीः ।
बृहस्पति-**प्रसूतास्**
ता नो **मुञ्चन्त्व्** अꣴहसः ।

या ओषधयस् सोम-राज्ञीꣳ
प्रविष्टाꣳ पृथिवीम् अनु ।
तासान् त्वम् अस्य् उत्तमा
**प्र** णो जीवातवे **सुव** ।

अवपतन्तीर् **अवदन्**
दिव ओषधयꣳ परि ।
“यञ् जीवम् **अश्नवामहै**

**न** स **रिष्याति** पूरुषः” ।

याश् चेदम् **उपश्रृण्वन्ति**
याश् च दूरम् **परागताः** ।
इह **सङ्गत्य** तास् सर्वा
अस्मै **सन्दत्त** भेषजम् ।

**मा** वो रिषत् **खनिता**,
(तथा) यस्मै चाहङ् **खनामि** वः ।
द्विपच् चतुष्पद् अस्माकꣳ
सर्वम् **अस्त्व् अनातुरम्** ।

ओषधयस् **सवँवदन्ते**
सोमेन सह राज्ञा ।
“यस्मै करोति ब्राह्मणस्
तꣳ राजन् **पारयामसि**” ॥ [28]

वपनादि

‘ब्रह्मजज्ञानं’ ‘पिता विराजाम्’ इति द्वाभ्यां मध्यपालिकायां,

ब्रह्म (=मन्त्रः ([सौरमण्डलयज्ञे])) जज्ञानं (=उत्पन्नम्)
प्रथमं पुरस्ताद्
वि सीमतस् सुरुचो वेन **आवः** ।
स बुध्न्या (=मूले भवः ([खस्य सूर्यः])) उपमा अस्य **विष्ठाः** (=विस्थितः),
सतश्च योनिम् (सूर्यम्) असतश्च **विवः** (=विवृतवान्) ।

पिता विराजाम्, ऋषभो रयीणाम् ।
अन्तरिक्षवँ विश्व-रूप **आविवेश** ।
तम् अर्कैर् **अभ्यर्चन्ति** वथ्सम् ।
ब्रह्म सन्तम् ब्रह्मणा **वर्धयन्तः** ।

‘यत इन्द्र’ ‘स्वस्तिदा’ इति द्वाभ्यां प्राच्यां,

यत इन्द्र भयामहे
ततो नो अभयं कृधि ।
मघवञ् छग्धि (=शक्तो वर्तस्व) तव तन् न(ः)
ऊतये(=रक्षायै, ऊतिभिर् इति शाकले)
वि द्विषो वि मृधो(=सङ्ग्रामान्) जहि ।।

स्वस्तिदा विशस्-पतिर्
वृत्रहा विमृधो वशी ।
वृषेन्द्रः पुर **एतु** नः
सोम-पा **अभयङ्-करः** ॥

‘योऽस्य कौष्ठ्य’ ‘यमङ्गाय’ इति द्वाभ्यां दक्षिणस्याम्,

योऽस्य (गोत्रेण) कौष्ठ्य! जगतः
पार्थिवस्यैक इद् वशी ।
यमं (नाम्ना) भङ्ग्य-श्रवो! **गाय**
यो राजा ऽनपरोध्यः ।

यमङ् **गाय** (नाम्ना) भङ्ग्यश्रवो!
यो राजा ऽनपरोध्यः ।
येनापो नद्यो धन्वानि(=मरुभूमयः)
येन द्यौः पृथिवी **दृढा** ।

‘इमं मे वरुण’ ‘तत्त्वा यामि’ इति प्रतीच्यां,

इमं मे वरुण श्रुधी (=श्रुणु)
हवम्(=आह्वानम्) अद्या च मृळय (=सुखय)।
त्वाम् अवस्युर् आ चके (=अवदन्)॥

तत् त्वा **यामि** ब्रह्मणा **वन्दमानस्**
तद् **आ शास्ते** यजमानो हविर्भिः ।
अहेळमानो (=अक्रुध्यन्) वरुणेह **बोध्य्** उरुशंस
मा न आयुः **प्र मोषीः** ॥

‘सोमो धेनुम्’ ‘आप्यायस्व’ इति द्वाभ्याम् उत्तरस्यां

---

सोमो॑ धे॒नुं, सोमो॒ अर्व॑न्तम् आ॒शुं
सोमो॑ वी॒रं क॑र्म॒ण्य॑ **ददाति** ।
सा॒द॒न्य॑(←सदन) वि॒द॒थ्य॑ स॒भेय॑
पि॒तृ-श्र॒व॑णं॒ यो **ददा॑शद्**(=दद्यात्) अस्मै
(यजमानाय) ॥

---

**आ प्या॑यस्व॒ समे॑तु** ते
वि॒श्वत॑ः सोम॒ वृष्ण्य॑म् ।
**भवा॒** वाज॑स्य **सङ्ग॒थे**(=संगमने) ॥

---

व्रीह्यादीन् **उप्त्वा**
शुद्धाभिर् मृद्भिः **प्रच्छाद्य**
पञ्च-गव्येन **सिक्त्वा**
**प्रणवेनाभिमन्त्र्य**
सुरक्षितं **कृत्वा**

पोषणोद्वासने
प्रतिदिनं **सम्पूज्य**
समाप्ते कर्मणि स-प्रणव-व्याहृतिभिः तैर् एव नामभिर्
देवता **उद्वासयेत्** ।

॥ इति प्रयोगचन्द्रिकायां तृतीयः खण्डः ॥